# लिङ्गाष्टकम्

ब्रह्ममुरारिसुरार्चितलिङ्गम् निर्मलभासितशोभितलिङ्गम्
जन्मजदुःखविनाशकलिङ्गम् तत्प्रणमामि सदाशिवलिङ्गम् १

देवमुनिप्रवरार्चितलिङ्गम् कामदहम् करुणाकर लिङ्गम्
रावणदर्पविनाशनलिङ्गम् तत्प्रणमामि सदाशिवलिङ्गम् २

सर्वसुगन्धिसुलेपितलिङ्गम् बुद्धिविवर्धनकारणलिङ्गम्
सिद्धसुरासुरवन्दितलिङ्गम् तत्प्रणमामि सदाशिव लिङ्गम् ३

कनकमहामणिभूषितलिङ्गम् फनिपतिवेष्टित शोभित लिङ्गम्
दक्षसुयज्ञ विनाशन लिङ्गम् तत्प्रणमामि सदाशिव लिङ्गम् ४

कुङ्कुमचन्दनलेपितलिङ्गम् पङ्कजहारसुशोभितलिङ्गम्
सञ्चितपापविनाशनलिङ्गम् तत्प्रणमामि सदाशिव लिङ्गम् ५

देवगणार्चित सेवितलिङ्गम् भावैर्भक्तिभिरेव च लिङ्गम्
दिनकरकोटिप्रभाकरलिङ्गम् तत्प्रणमामि सदाशिव लिङ्गम् ६

अष्टदलोपरिवेष्टितलिङ्गम् सर्वसमुद्भवकारणलिङ्गम्
अष्टदरिद्रविनाशितलिङ्गम् तत्प्रणमामि सदाशिव लिङ्गम् ७

सुरगुरुसुरवरपूजित लिङ्गम् सुरवनपुष्प सदार्चित लिङ्गम्
परात्परं परमात्मक लिङ्गम् तत्प्रणमामि सदाशिव लिङ्गम् ८

लिङ्गाष्टकमिदं पुण्यं यः पठेत् शिवसन्निधौ
शिवलोकमवाप्नोति शिवेन सह मोदते

Reference:
Narayana Rama Acharya, ed., *Brihat-Stotra-Ratnakarah*, Part I,
(Varanasi: Chaukhambha Orientalia, 1997), p. 239.